यत्तु पार्थेन मे स्नेहात् प्रतिज्ञा चाभिरक्षिता। सदृशोऽस्य हतो बाहुरनेनैवास्मि वञ्चितः।
भवितव्यञ्च यच्चापि दैवं चेष्टयतीव च। सोऽयं हतो विमर्द्देऽस्मिन् किमत्राधर्म्मचेष्टितं।
अपि चायं पुरा गीतः श्लोको वाल्मीकिना भुवि। न हन्तव्याः स्त्रिय इति यद्ब्रवीषि प्लवङ्गम।
सर्व्वकालं मनुष्येण व्यवसायवता सदा। पीडाकरममित्राणां यत् स्यात्कर्त्तव्यमेव तत्। ६०९०
॥ सञ्जय उवाच ॥ एवमुक्ते महाराज सर्व्वे पाण्डवकौरवाः। न स्म किञ्चिदभाषन्त मनसा समपूजयन्।
मन्त्राभिपूतस्य महाध्वरेषु यशस्विनो भूरिसहस्रदस्य। मुनेरिवारण्यगतस्य तस्य न तत्र कश्चिद्वधमभ्यनन्दत्।
सुनीलकेशं वरदस्य तस्य शूरस्य पारावतलोहिताक्षं। अश्वस्य मेध्यस्य शिरो निकृत्तं न्यस्तं हविर्द्धानमिवान्तरेण।
स तेजसा शस्त्रहतेन पूतो महाहवे देहवरं विसृज्य। आक्रामदूर्द्ध्वं वरदो वरार्हो व्यावृत्य धर्म्मेण परेण रोदसी।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भूरिश्रवोवधे चतुश्चत्वारिंशदधिकशततमोऽध्यायः॥ १४२॥
॥ धृतराष्ट्र उवाच ॥ अजितो द्रोणराधेयविकर्णकृतवर्म्मभिः। तीर्णः सैन्यार्णवं वीरः प्रतिश्रुत्य युधिष्ठिरे। ६०९५
स कथं कौरवेयेण समरेष्वनिवारितः। निगृह्य भूरिश्रवसा बलाद्भुवि निपातितः।
॥ सञ्जय उवाच ॥ शृणु राजन्निहोत्पत्तिं शैनेयस्य यथा पुरा। यथा च भूरिश्रवसो यत्र ते संशयो नृप।
अत्रेः पुत्त्रोऽभवत् सोमः सोमस्य तु बुधः स्मृतः। बुधस्यासीन्महेन्द्राभः पुत्त्र आसीत् पुरूरवाः।
पुरूरवस आयुस्तु आयुषो नहुषः सुतः। नहुषस्य ययातिस्तु राजर्षिर्द्देवसम्मितः।
ययातेर्द्देवयान्यान्तु यदुर्ज्येष्ठोऽभवत् सुतः। यदोरभूदन्ववाये देवमीढ इति श्रुतः। ६१००
यादवस्तस्य तु सुतः शूरस्त्रैलोक्यसम्मतः। शूरस्य शौरिर्नृवरो वसुदेवो महायशाः।
धनुष्यनवरः शूरः कार्त्तवीर्य्यसमो युधि। तद्वीर्य्यश्चापि तत्रैव कुले शिनिरभून्नृप।
एतस्मिन्नेव काले तु देवकस्य महात्मनः। दुहितुः स्वयम्बरे राजन् सर्व्वक्षत्त्रसमागमे।
तत्र वै देवकीं देवीं वसुदेवार्थमाशु वै। निर्ज्जित्य पार्थिवान् सर्व्वान् रथमारोपयच्छिनिः।
तां दृष्ट्वा देवकीं शौरे रथस्थां पुरुषर्षभ। नामृष्यत महातेजाः सोमदत्तः शिनेर्नृप। ६१०५
तयोर्युद्धमभूद्राजन् दिनार्द्धं चित्रमद्भुतं। बाहुयुद्धं सुबलिनोः प्रसक्तं पुरुषर्षभ।
शिनिना सोमदत्तस्तु प्रसह्य भुवि पातितः। असिमुद्यम्य केशेषु प्रगृह्य च पदा हतः।
मध्ये राजसहस्राणां प्रेक्षकाणां समन्ततः। कृपया च पुनस्तेन स जीवेति विसर्ज्जितः।
तदवस्थः कृतस्तेन सोमदत्तोऽथ मारिष। प्रसादयन्महादेवममर्षवशमास्थितः।
तस्य तुष्टो महादेवो वरदानां महाप्रभुः। वरेण छन्दयामास स तु वव्रे वरं नृपः। ६११०
पुत्त्रमिच्छामि भगवन् यो वै हन्याच्छिनेः सुतं। मध्ये राजसहस्राणां पदा हन्याच्च संयुगे।
तस्य तद्वचनं श्रुत्वा सोमदत्तस्य पार्थिव। एवमस्त्विति तत्रोक्त्वा स देवोऽन्तरधीयत।
स तेन वरदानेन लब्धवान् भूरिदक्षिणं। न्यपातयच्च समरे सोमदत्तिः शिनेः सुतं।
पश्यतां सर्व्वसैन्यानां पदा चैनमताडयत्। एतत्ते कथितं राजन् यन्मां त्वं परिपृच्छसि।
न च शक्यो रणे जेतुं सात्वतो मनुजर्षभैः। लब्धलक्ष्याश्च संग्रामे बहवश्चित्रयोधिनः।

देवदानवगन्धर्व्वा विजेतारो ह्यविस्मिता । स्ववीर्य्यविजये युक्ता नैते परपरिग्रहाः ।
न तुल्यं वृष्णिभिरिह दृश्यते किञ्चन प्रभो । भूतं भव्यं भविष्यच्च बलेन भरतर्षभ ।
न ज्ञातिमवमन्यन्ते वृद्धानां शासने रताः । न देवासुरगन्धर्व्वा न यक्षोरगराक्षसाः ।
जेतारो वृष्णिवीराणां किं पुनर्मानुषा रणे । ब्रह्मद्रव्ये गुरुद्रव्ये ज्ञातिद्रव्येऽप्यहिंसकाः ।
एतेषां रक्षितारश्च ये स्युः कस्याञ्चिदापदि । अर्थवन्तो नचोत्सिक्ता ब्रह्मण्याः सत्यवादिनः । १०५०
समर्थानपि मन्यन्ते दीनानभ्युद्धरन्ति च । नित्यं देवपरा दान्ता दातारश्चाविकत्थनाः ।
तेन वृष्णिप्रवीराणां चक्रं न प्रतिहन्यते । अपि मेरुं वहेत्कश्चित् तरेद्वा मकरालयं ।
न तु वृष्णिप्रवीराणां समेत्यान्तं प्रजेन्नृप । एतत्ते सर्व्वमाख्यातं यत्र ते संशयो विभो ।
कुरुराज नरश्रेष्ठ तव ह्यपनयो महान् ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिप्रशंसायां चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥
॥ धृतराष्ट्र उवाच ॥ तदवस्थे हते तस्मिन् भूरिश्रवसि कौरवे । यथा भूयोऽभवद्युद्धं तन्ममाचक्ष्व सञ्जय । १०५
॥ सञ्जय उवाच ॥ भूरिश्रवसि संक्रान्ते परलोकाय भारत । वासुदेवं महाबाहुरर्ज्जुनः समचूचुदत् ।
चोदयाश्वान् भृशं कृष्ण यतो राजा जयद्रथः । प्रतिज्ञां सफलाञ्चापि कर्त्तुमर्हसि मेऽनघ ।
अस्तमेति महाबाहो त्वरमाणो दिवाकरः । एतद्धि पुरुषव्याघ्र महदभ्युदितं मया ।
कार्य्यं संरक्ष्यते चैष कुरुसेनामहारथैः । नास्तमेति यथा सूर्य्यो यथा सत्यं भवेद्वचः ।
चोदयाश्वांस्तथा कृष्ण यथा हन्यां जयद्रथं । ततः कृष्णो महाबाहू रजतप्रतिमान् हयान् । १०५५
हयज्ञश्चोदयामास जयद्रथरथम्प्रति । तं प्रयान्तममोघेषुमुत्पतद्भिरिवाशुगैः ।
त्वरमाणा महाराज सेनामुख्याः समाव्रजन् । दुर्य्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट् ।
अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः । समासाद्य तु बीभत्सुः सैन्धवं प्रमुखे स्थितं ।
नेत्राभ्यां क्रोधदीप्ताभ्यां संप्रैक्षन्निर्दहन्निव । ततो दुर्य्योधनो राजा राधेयं त्वरितोऽब्रवीत् ।
अर्ज्जुनं वीक्ष्य संयातं जयद्रथवधम्प्रति । उवाच राजन् पुत्रस्ते कर्णं राजा सुयोधनः । १०६१
अयं स वैकर्त्तन युद्धकालो प्रदर्शय स्वात्मबलं महात्मन् । यथा न बध्येत रणेऽर्ज्जुनेन जयद्रथः कर्ण तथा कुरुष्व ।
अल्पावशिष्टं दिवसं नृवीर विघातयस्वाद्य रिपुं शरौघैः । दिनक्षयम्प्राप्य नरप्रवीर ध्रुवं हि नः कर्ण जयो भविष्यति ।
सैन्धवे रक्ष्यमाणे तु सूर्य्यस्यास्तमनम्प्रति । मिथ्याप्रतिज्ञः कौन्तेयः प्रवेक्ष्यति हुताशनं ।
अनर्ज्जुनायाश्च भुवि मुहूर्त्तमपि मानद । जीवितुं नोत्सहेरन् वै भ्रातरोऽस्य सहानुगाः ।
विनष्टैः पाण्डवेयैश्च सशैलवनकाननां । वसुन्धरामिमां कर्ण भोक्ष्यामो हतकण्टकां । १०७०
दैवेनोपहतः पार्थो विपरीतश्च मानद । कार्य्याकार्य्यमजानन्वै प्रतिज्ञां कृतवान् रणे ।
नूनमात्मविनाशाय पाण्डवेन किरीटिना । प्रतिज्ञेयं कृता कर्ण जयद्रथवधम्प्रति ।
कथं जीवति दुर्द्धर्षे त्वयि राधेय फाल्गुनः । अनस्तं गत आदित्ये हन्यात् सैन्धवकं नृप ।
रक्षितं मद्रराजेन कृपेण च महात्मना । जयद्रथं रणमुखे कथं हन्याद्धनञ्जयः ।

द्रौणिना रक्ष्यमाणस्य मया दुःशासनेन च। कथं प्राप्स्यति बीभत्सुः सैन्धवं कालचोदितः। ६०६५
युध्यन्ते यत्र शूरा हि लम्बते च दिवाकरः। शङ्के जयद्रथं पार्थो नैव प्राप्स्यति मानद।
स त्वं कर्ण मया सार्द्धं शूरैश्चान्यैर्महारथैः। द्रौणिना त्वं हि सहितो मद्रेशेन कृपेण च।
युध्यस्व यत्नमास्थाय परं पार्थेन संयुगे। एवमुक्तस्तु राधेयस्तव पुत्त्रेण मारिष।
दुर्य्योधनमिदं वाक्यं प्रत्युवाच कुरूत्तमं। दृढलक्ष्येण शूरेण भीमसेनेन धन्विना।
भृशं भिन्नतनुः सङ्ख्ये शरजालैरनेकशः। स्थातव्यमिति तिष्ठामि रणे सम्प्रति मानद। ६०७०
नाङ्गमिङ्गति किञ्चिन्मे सन्तप्तस्य महेषुभिः। योत्स्यामि तु यथाशक्त्या त्वदर्थं जीवितं मम।
यथा पाण्डवमुख्योऽसौ न हनिष्यति सैन्धवं। न हि मे युध्यमानस्य सायकानस्यतः शितान्।
सैन्धवम्प्राप्स्यते वीरः सव्यसाची धनञ्जयः। यत्तु भक्तिमता कार्य्यं सततं हितकाङ्क्षिणा।
तत्करिष्यामि कौरव्य जयो दैवे प्रतिष्ठितः। सैन्धवार्थं परं यत्नं करिष्याम्यद्य संयुगे।
त्वत्प्रियार्थं महाराज जयो दैवे प्रतिष्ठितः। अद्य योत्स्येऽर्ज्जुनमहं पौरुषं संव्यपाश्रितः। ६०७५
त्वदर्थं पुरुषव्याघ्र जयो दैवे प्रतिष्ठितः। अद्य युद्धं कुरुश्रेष्ठ मम पार्थस्य चोभयोः।
पश्यन्तु सर्व्वसैन्यानि दारुणं लोमहर्षणं। कर्णकौरवयोरेवं रणे सम्भाषमाणयोः।
अर्ज्जुनो निशितैर्वाणैर्जघान तव वाहिनीं। चिच्छेद निशितैर्भल्लैः शूराणामनिवर्त्तिनां।
भुजान् परिघसङ्काशान् हस्तिहस्तोपमान् रणे। शिरांसि च महाबाहुश्चिच्छेद निशितैः शरैः।
हस्तिहस्तान् हयग्रीवान् रथाक्षांश्च समन्ततः। शोणिताक्तान् हयारोहान् गृहीतप्रासतोमरान्। ६०८०
क्षुरैश्चिच्छेद बीभत्सुर्द्विधैकैकं त्रिधैव च। हया वारणमुख्याश्च प्रापतंश्च समन्ततः।
ध्वजांश्छत्त्राणि चापानि चामराणि शिरांसि च। कक्षमग्निरिवोद्भूतः प्रदहंस्तव वाहिनीं।
अचिरेण महीं पार्थश्चकार रुधिरोत्तरां। हतभूयिष्ठयोधन्तत् कृत्वा तव बलं बली।
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः। बीभत्सुर्भीमसेनेन सात्वतेन च रक्षितः।
प्रबभौ भरतश्रेष्ठ ज्वलन्निव हुताशनः। तं तथाऽवस्थितं दृष्ट्वा त्वदीया वीर्य्यसम्पदा। ६०८५
नामृष्यन्त महेष्वासाः फाल्गुनं पुरुषर्षभाः। दुर्य्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट्।
अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः। संरब्धाः सैन्धवस्यार्थे समावृण्वन् किरीटिनं।
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनिस्वनैः। सङ्ग्रामकोविदं पार्थं सर्व्वे युद्धविशारदाः।
अभीताः पर्य्यवर्त्तन्त व्यादितास्यमिवान्तकं। सैन्धवं पृष्ठतः कृत्वा जिघांसन्तोऽर्ज्जुनाच्युतौ।
सूर्य्यास्तमनमिच्छन्तो लोहितायति भास्करे। ते भुजैर्भोगिभोगाभैर्धनूंष्यानम्य सायकान्। ६०९०
मुमुचुः सूर्य्यरश्म्याभाञ्छतशः फाल्गुनम्प्रति। तानस्तानस्यमानांश्च किरीटी युद्धदुर्म्मदः।
द्विधा त्रिधाष्टधैकैकं छित्त्वा विव्याध तान् रणे। सिंहलाङ्गूलकेतुस्तु दर्शयञ्छक्तिमात्मनः।
शारद्वतीसुतो राजन्नर्ज्जुनं प्रत्यवारयत्। स विद्ध्वा दशभिः पार्थं वासुदेवञ्च सप्तभिः।
अतिष्ठद्रथमार्गेषु सैन्धवं परिपालयन्। अथैनं कौरवश्रेष्ठाः सर्व्वे एव महारथाः।

महता रथवंशेन सर्व्वतः पर्य्यवारयन् । विस्फारयन्तश्चापानि विसृजन्तश्च सायकान् । १२०५
सैन्धवं पर्य्यरक्षन्त शासनात्तनयस्य ते । तत्र पार्थस्य शूरस्य बाह्वोर्बलमदृश्यत ।
इषूणामक्षयत्वञ्च धनुषो गाण्डिवस्य च । अस्त्रैरस्त्राणि संवार्य्य द्रौणेः शारद्वतस्य च ।
एकैकं नवभिर्बाणैः सर्व्वानेव समार्पयत् । तं द्रौणिः पञ्चविंशत्या वृषसेनश्च सप्तभिः ।
दुर्य्योधनस्तु विंशत्या कर्णशल्यौ त्रिभिस्त्रिभिः । त एनमभिगर्ज्जन्तो विध्यन्तश्च पुनः पुनः ।
विधुन्वन्तश्च चापानि सर्व्वतः पर्य्यवारयन् । श्लिष्टञ्च सर्व्वतश्चक्रू रथमण्डलमाशु ते । १२१०
सूर्य्यास्तमनमिच्छन्तस्त्वरमाणा महारथाः । त एनमभिनर्द्दन्तो विधुन्वाना धनूंषि च ।
सिषिचुर्म्मार्गणैस्तीक्ष्णैर्गिरिं मेघा इवाम्बुभिः । ते महास्त्राणि दिव्यानि तत्र राजन् व्यदर्शयन् ।
धनञ्जयस्य गात्रे तु शूराः परिघबाहवः । हतभूयिष्ठयोधं तत् कृत्वा तव बलं बली ।
आससाद सुदुर्द्धर्षं सैन्धवं सत्यविक्रमः । तं कर्णः संयुगे राजन् प्रत्यवारयदाशुगैः ।
मिषतो भीमसेनस्य सात्वतस्य च भारत । तं पार्थो दशभिर्ब्बाणैः प्रत्यविध्यद्रणाजिरे । १२१५
सूतपुत्रं महाबाहुः सर्व्वसैन्यस्य पश्यतः । सात्वतस्तु त्रिभिर्ब्बाणैः कर्णं विव्याध मारिष ।
भीमसेनस्त्रिभिश्चैव पुनः पार्थश्च सप्तभिः । तान् कर्णः प्रतिविव्याध षष्ट्या षष्ट्या महारथः ।
तद्युद्धमभवद्राजन् कर्णस्य बहुभिः सह । तत्राद्भुतमपश्याम सूतपुत्रस्य मारिष ।
यदेकः समरे क्रुद्धस्त्रीन् रथान् पर्य्यवारयत् । फाल्गुनस्तु महाबाहुः कर्णं वैकर्त्तनं रणे ।
सायकानां शतेनैव सर्व्वमर्म्मस्वताडयत् । रुधिरोक्षितसर्व्वाङ्गः सूतपुत्रः प्रतापवान् । १२२०
शरैः पञ्चाशता वीरः फाल्गुनं प्रत्यविध्यत । तस्य तल्लाघवं दृष्ट्वा नामृष्यत रणेऽर्ज्जुनः ।
तस्य पार्थो धनुश्छित्त्वा विव्याधैनं स्तनान्तरे । सायकैर्न्नवभिर्व्वीरस्त्वरमाणो धनञ्जयः ।
वधार्थं तस्य समरे सायकं सूर्य्यवर्च्चसं । चिक्षेप त्वरया युक्तस्त्वराकाले धनञ्जयः ।
तमापतन्तं वेगेन द्रौणिश्चिच्छेद सायकं । अर्द्धचन्द्रेण तीक्ष्णेन स छिन्नः प्रापतद्भुवि ।
अथान्यद्धनुरादाय सूतपुत्रः प्रतापवान् । सायकैर्ब्बहुसाहस्रैश्छादयामास पाण्डवं । १२२५
तां शरवृष्टिमतुलां कर्णचापसमुत्थितां । व्यधमत्सायकैः पार्थः शलभानिव मारुतः ।
छादयामास च तदा सायकैरर्ज्जुनो रणे । पश्यतां सर्व्वयोधानां दर्शयन् पाणिलाघवं ।
कर्णोऽपि द्विषतां हन्ता छादयामास फाल्गुनं । सायकैर्ब्बहुसाहस्रैः कृतप्रतिकृतेप्सया ।
तौ वृषाविव नर्द्दन्तौ नरसिंहौ महारथौ । सायकैः प्रतिच्छन्नं चक्रतुः खमजिह्मगैः ।
अदृश्यौ च शरौघैस्तौ निघ्नतामितरेतरं । पार्थोऽहमस्मि तिष्ठेति कर्णोऽहं तिष्ठ फाल्गुन । १२३०
इत्येवं तर्ज्जमानौ तु वाक्शल्यैस्तुदता तदा । युध्येतां समरे वीरौ चित्रं लघु च सुष्ठु च ।
प्रेक्षणीयावभवतां सर्व्वयोधसमागमे । प्रशस्यमानौ समरे सिद्धचारणवातिकैः ।
अयुध्येतां महाराज परस्परवधैषिणौ । ततो दुर्य्योधनो राजंस्तावकानभ्यभाषत ।
यत्नाद्रक्षत राधेयं नाहत्वा समरेऽर्ज्जुनं । निवर्त्तिष्यति राधेय इति मामुक्तवान् वृषः ।

एतस्मिन्नन्तरे राजन् दृष्ट्वा कर्णस्य विक्रमम्। आकर्णमुक्तैरिषुभिः कर्णस्य चतुरो हयान्। ६१९५
अनयन्मृत्युलोकाय चतुर्भिः श्वेतवाहनः। सारथिञ्चास्य भल्लेन रथनीडादपाहरत्।
छादयामास च शरैस्तव पुत्रस्य पश्यतः। स च्छाद्यमानः समरे हताश्वो हतसारथिः।
मोहितः शरजालेन कर्त्तव्यं नाभ्यपद्यत। तं तथा विरथं दृष्ट्वा रथमारोप्य तं तदा।
अश्वत्थामा महाराज भूयोऽर्ज्जुनमयोधयत्। मद्रराजस्तु कौन्तेयमविध्यत्त्रिंशता शरैः।
शारद्वतस्तु विंशत्या वासुदेवं समार्पयत्। धनञ्जयं द्वादशभिराजघान शिलीमुखैः। ६२००
चतुर्भिः सिन्धुराजश्च वृषसेनश्च सप्तभिः। पृथक् पृथङ्महाराज कृष्णपार्थावविध्यताम्।
तथैव तान् प्रत्यविध्यत् कुन्तीपुत्त्रो धनञ्जयः। द्रोणपुत्त्रं चतुःषष्ट्या मद्रराजं शतेन च।
सैन्धवं दशभिर्भल्लैर्वृषसेनं त्रिभिः शरैः। शारद्वतञ्च विंशत्या विद्ध्वा पार्थः समुन्नदन्।
ते प्रतिज्ञाप्रतीघातमिच्छन्तः सव्यसाचिनः। रोषितास्तावकास्तूर्णमभिपेतुर्धनञ्जयम्।

अथार्ज्जुनः सर्व्वतो वारुणास्त्रं प्रादुश्चक्रे त्रासयन् धार्त्तराष्ट्रान्। तं प्रत्युदीयुः कुरवः पाण्डुपुत्त्रं रथैर्म्महार्हैः शरवर्षाण्यवर्षन्। ६२०५

ततस्तु तस्मिंस्तुमुले समुत्थिते सुदारुणे भारत मोहनीये। नामुह्यत प्राप्य स राजपुत्त्रः किरीटमाली विसृजन् पृषत्कान्।

राज्यमीप्सुः सव्यसाची कुरूणां स्मरन् क्लेशान् द्वादशवर्षवृत्तान्। गाण्डीवमुक्तैरिषुभिर्म्महात्मा सर्व्वा दिशो व्यावृणोदप्रमेयः।

प्रदीप्तोल्कमभवच्चान्तरीक्षं देहेषु भूरीण्यपतन् वयांसि। यत्पिङ्गलज्येन किरीटमाली क्रुद्धो रिपूनाजगवेन हन्ति।

ततः किरीटी महता महायशाः शरासनेनास्य शराननीकजित्। हयप्रवेकोत्तमनागधूर्गतान् कुरुप्रवीरानिषुभिर्न्यपातयत्।

गदाश्च गुर्व्वीः परिघानयस्मयानसींश्च शक्तीश्च रणे नराधिपाः। महान्ति शस्त्राणि च भीमदर्शनाः प्रगृह्य पार्थं सहसाभिदुद्रुवुः। ६२१०

ततो युगान्ताभ्रघनस्वनं महत् महेन्द्रचापप्रतिमं स गाण्डिवम्। चकर्ष दोर्भ्यां विहसन् भृशं यथा दहंस्तवारीन् यम राष्ट्रवर्द्धनः।

स तानुदीर्णान् सरथान् सनागान् पदातिसङ्घांश्च धनुर्धरांश्च। विपन्नसर्व्वायुधजीवितान् रणे चकार वीरो यमराष्ट्रवर्द्धनान्।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सङ्कुलयुद्धे पञ्चचत्वारिंशदधिकशततमोऽध्यायः॥ १४५ ॥

॥ सञ्जय उवाच ॥ श्रुत्वा निनादं धनुषस्तस्य विस्फारितं क्रुष्टमिवान्तकस्य। शक्राशनिस्फोटसमं सुघोरं विकृष्यमाणस्य धनञ्जयेन।

चालोर्द्दितं तदोद्भ्रान्तं त्वदीयं तद्बलं नृप। युगान्तवातसंक्षुब्धं चलद्वीचितरङ्गिणम्।
प्रलीनमीनमकरं सागराम्भ इवाभवत्। स रणे व्यचरत् पार्थः प्रेक्षणीयो धनञ्जयः। ६२१५
युगपद्दिक्षु सर्व्वासु चित्राण्यस्त्राणि दर्शयन्। आददानं महाराज सन्दधानञ्च पाण्डवम्।

महता रथवंशेन सर्व्वतः पर्य्यवारयन् । विस्फारयन्तश्चापानि विमुञ्चन्तश्च सायकान् ॥ ६१०५

सैन्धवं पर्य्यरक्षन्त शासनात्तनयस्य ते । तत्र पार्थस्य शूरस्य बाह्वोर्बलमदृश्यत ।

इषूणामक्षयत्वञ्च धनुषो गाण्डिवस्य च । अस्त्रैरस्त्राणि संवार्य्य द्रौणेः शारद्वतस्य च ।

एकैकं नवभिर्बाणैः सर्व्वानेव समार्पयत् । तं द्रौणिः पञ्चविंशत्या वृषसेनश्च सप्तभिः ।

दुर्य्योधनस्तु विंशत्या कर्णशल्यौ त्रिभिस्त्रिभिः । त एनमभिगर्ज्जन्तो विध्यन्तश्च पुनः पुनः ।

विधुन्वन्तश्च चापानि सर्व्वतः पर्य्यवारयन् । श्लिष्टञ्च सर्व्वतश्चक्रू रथमण्डलमाशु ते ॥ ६११०

सूर्य्यास्तमनमिच्छन्तस्त्वरमाणा महारथाः । त एनमभिगर्ज्जन्तो विधुन्वाना धनूंषि च ।

सिषिचुर्म्मार्गणैस्तीक्ष्णैर्गिरिं मेघा इवाम्बुभिः । ते महास्त्राणि दिव्यानि तत्र राजन् व्यदर्शयन् ।

धनञ्जयस्य गात्रे तु शूराः परिघबाहवः । हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली ।

आससाद सुदुर्द्धर्षः सैन्धवं सत्यविक्रमः । तं कर्णः संयुगे राजन् प्रत्यवारयदाशुगैः ।

मिषतो भीमसेनस्य सात्वतस्य च भारत । तं पार्थो दशभिर्बाणैः प्रत्यविध्यद्रणाजिरे ॥ ६११५

सूतपुत्रं महाबाहुः सर्व्वसैन्यस्य पश्यतः । सात्वतस्तु त्रिभिर्बाणैः कर्णं विव्याध मारिष ।

भीमसेनस्त्रिभिश्चैव पुनः पार्थश्च सप्तभिः । तान् कर्णः प्रतिविव्याध षष्ट्या षष्ट्या महारथः ।

तद्युद्धमभवद्राजन् कर्णस्य बहुभिः सह । तत्राद्भुतमपश्याम सूतपुत्रस्य मारिष ।

यदेकः समरे क्रुद्धस्त्रीन् रथान् पर्य्यवारयत् । फाल्गुनस्तु महाबाहुः कर्णं वैकर्त्तनं मृधे ।

सायकानां शतेनैव सर्व्वमर्म्मस्वताडयत् । रुधिरोक्षितसर्व्वाङ्गः सूतपुत्रः प्रतापवान् ॥ ६१२०

शरैः पञ्चाशता वीरः फाल्गुनं प्रत्यविध्यत । तस्य तल्लाघवं दृष्ट्वा नामृष्यत रणेऽर्ज्जुनः ।

तस्य पार्थो धनुश्छित्त्वा विव्याधैनं स्तनान्तरे । सायकैर्नवभिर्व्वीरस्त्वरमाणो धनञ्जयः ।

वधार्थं तस्य समरे सायकं सूर्य्यवर्चसं । चिक्षेप त्वरया युक्तस्त्वराकाले धनञ्जयः ।

तमापतन्तं वेगेन द्रौणिश्चिच्छेद सायकं । अर्द्धचन्द्रेण तीक्ष्णेन स छिन्नः प्रापतद्भुवि ।

अथान्यद्धनुरादाय सूतपुत्रः प्रतापवान् । सायकैर्बहुसाहस्रैश्छादयामास पाण्डवं ॥ ६१२५

तां शरवृष्टिमतुलां कर्णचापसमुत्थितां । व्यधमत्सायकैः पार्थः शलभानिव मारुतः ।

छादयामास च तदा सायकैरर्ज्जुनो रणे । पश्यतां सर्व्वयोधानां दर्शयन् पाणिलाघवं ।

कर्णोऽपि द्विषतां हन्ता छादयामास फाल्गुनं । सायकैर्बहुसाहस्रैः कृतप्रतिकृतैषया ।

तौ वृषाविव नर्द्दन्तौ नरसिंहौ महारथौ । सायकौघप्रतिच्छन्नं चक्रतुः खमजिह्मगैः ।

अदृश्यौ च शरौघैस्तौ निघ्नतामितरेतरं । पार्थोऽहमस्मि तिष्ठेह कर्णोऽहं तिष्ठ फाल्गुन ॥ ६१३०

इत्येवं तर्ज्जमानौ तु वाक्शल्यैस्तुदतां तदा । युध्येतां समरे वीरौ चित्रं लघु च सुष्ठु च ।

प्रेक्षणीयावभवतां सर्व्वयोधसमागमे । प्रशस्यमानौ समरे सिद्धचारणवातिकैः ।

अयुध्येतां महाराज परस्परवधैषिणौ । ततो दुर्य्योधनो राजंस्तावकानभ्यभाषत ।

यत्नाद्रक्षत राधेयं नाहत्वा समरेऽर्ज्जुनं । निवर्त्तिष्यति राधेय इति मामुक्तवान् वृषः ।

मांसाशिभिः क्रिपरश्च विशिखाहितदुरासदां । बलकद्रुमशाखाढ्यां गोमायुमकरोत्कटां ।
रक्षोदयमहाघाटां शिवाभिरुतभैरवां । नृत्यत्प्रेतपिशाचाद्यैर्भूताकीर्णां सहस्रशः ।
गतासुयोधनिश्चेष्टशरीरप्लववाहिनीं । महाप्रतिभयां रौद्रां घोरां वैतरणीमिव ।
नदीं प्रवर्त्तयामास भीरूणां भयवर्द्धिनीं । तं दृष्ट्वा तस्य विक्रान्तमन्तकस्येव रूपिणः । ६०९०
अभूतपूर्व्वं कुरुषु भयमागाद्रणाजिरे । तत आदाय वीराणामस्त्रैरस्त्राणि पाण्डव ।
आत्मानं रौद्रमाचष्ट रौद्रकर्म्मणि धिष्ठितः । ततो रथवरानाजावत्यक्रामदर्जुनः ।
मध्यन्दिनगतं सूर्य्यं प्रतपन्तमिवाम्बरे । नाशकुः सर्व्वभूतानि पाण्डवं प्रतिवीक्षितुं ।
प्रच्युतान् तस्य गाण्डीवाच्छरजातान्महात्मनः । सङ्ग्रामे सम्प्रपश्यामो हंसपङ्क्तीरिवाम्बरे ।
विनिवार्य्य स वीराणामस्त्रैरस्त्राणि सर्व्वशः । दर्शयन् रौद्रमात्मानमुग्रे कर्म्मणि धिष्ठितः । ६०९५
स तान् रथवरान् राजन्नत्यक्रामत्तदार्ज्जुनः । मोहयन्निव नाराचैर्जयद्रथवधेप्सया ।
विसृजन् दिक्षु सर्व्वासु शरानसितवाजिराट् । स रणे व्यचरत्तूर्णं प्रेक्षणीयो धनञ्जयः ।
भ्रमन्त इव शूरस्य शरव्राता महात्मनः । अदृश्यन्तान्तरीक्षस्थाः शतशोऽथ सहस्रशः ।
आददानं महेष्वासं सन्दधानञ्च पाण्डवं । विसृजन्तञ्च कौन्तेयं नानुपश्यामहे तदा ।
तथा सर्व्वा दिशो राजन् सर्व्वांश्च रथिनो रणे । आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् । ६१००
विव्याध च चतुःषष्ट्या शराणां नतपर्व्वणा । सैन्धवाभिमुखं यान्तं योधाः सम्प्रेक्ष्य पाण्डवं ।
न्यवर्त्तन्त रणाद्वीरा निराशास्तस्य जीविते । यो योऽभ्यधावदाक्रन्दे तावकः पाण्डवं रणे ।
तस्य तस्यान्तगो बाणः शरीरे न्यपतत्प्रभो । कबन्धसङ्कुलञ्चक्रे तव सैन्यं महारथः ।
अर्ज्जुनो जयतां श्रेष्ठ शरैरग्न्यर्कसन्निभैः । एवं तत्तव राजेन्द्र चतुरङ्गबलं तदा ।
आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् । द्रौणिं पञ्चाशताऽविध्यद्वृषसेनं त्रिभिः शरैः । ६१०५
कृपायमाणः कौन्तेयः कृपं नवभिरार्द्दयत् । शल्यं षोडशभिर्बाणैः कर्णं द्वात्रिंशता शरैः ।
सैन्धवञ्च चतुःषष्ट्या विद्ध्वा सिंह इवानदत् । सैन्धवस्तु तदा विद्धः शरैर्गाण्डीवधन्वना ।
न चक्षमे सुसंक्रुद्धस्तोत्त्रार्द्दित इव द्विपः । स वराहध्वजस्तूर्णं गार्द्ध्रपत्रानजिह्मगान् ।
आशीविषसमप्रख्यान् कर्म्मारपरिमार्ज्जितान् । आकर्णपूर्णान्चिक्षेप फाल्गुनस्य रथम्प्रति ।
त्रिभिस्तु विद्ध्वा गोविन्दं नाराचैः षड्भिरर्ज्जुनं । अष्टाभिर्वाजिनोऽविध्यद्ध्वजञ्चैकेन पत्रिणा । ६११०
स विक्षिप्यार्ज्जुनस्तीक्ष्णान् सैन्धवप्रहिताञ्छरान् । युगपत्तस्य चिच्छेद शराभ्यां सैन्धवस्य च ।
सारथेश्च शिरः कायात् ध्वजञ्च समलङ्कृतं । स छिन्नयष्टिः सुमहान्दीर्य्यमाणः शराहतः ।
वराहः सिन्धुराजस्य पपाताग्निशिखोपमः । एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे ।
अब्रवीत् पाण्डवं तत्र त्वरमाणो जनार्द्दनः । एष मध्ये कृतः षड्भिः पार्थ वीरैर्महारथैः ।
जीवितेप्सुर्महाबाहो भीतस्तिष्ठति सैन्धवः । एताननिर्ज्जित्य रणे षड्रथान् पुरुषर्षभ । ६११५
न शक्यः सैन्धवो हन्तुं यत्तो निर्व्याजमर्ज्जुन । योगमत्र विधास्यामि सूर्य्यस्यावरणं प्रति ।

उत्कर्षन्तं सृजन्तञ्च न स्म पश्याम लाघवात् । ततः क्रुद्धो महाबाहुरैन्द्रमस्त्रं दुरासदं ।
प्रादुश्चक्रे महाराज त्रासयन् सर्व्वभारतान् । ततः शराः प्रादुरासन् दिव्यास्त्रप्रतिमन्त्रिताः ।
प्रदीप्ताग्रशिखिमुखाः शतशोऽथ सहस्रशः । आकर्णपूर्णनिर्मुक्तैरग्न्यर्कांशुनिभैः शरैः ।
नभोऽभवत् सुदुष्प्रेक्ष्यमुल्काभिरिव संवृतं । ततः शरान्धकारं तत् कौरवैः समुदीरितं । १९५०
अशक्यं मनसाऽप्यन्यैः पाण्डवः सर्व्वमच्छिनत् । नाशयामास विहस्य शरैर्दिव्यास्त्रमन्त्रितैः ।
नैशन्तमोऽंशुभिः क्षिप्रं दिनादाविव भास्करः । ततस्तु तावकं सैन्यं दीप्तैः शरगभस्तिभिः ।
आक्षिपत् पल्वलाम्बूनि निदाघार्क इव प्रभुः । ततो दिव्यास्त्रविदुषा प्रहिताः सायकास्तथा ।
समाप्लुवन् द्विषत्सैन्यं लोकं भानोरिवांशवः । तथा परे समुत्सृष्टा विशिखास्तिग्मतेजसः ।
हृदयान्याशु वीराणां विविशुः प्रियबन्धुवत् । य एनमीयुः समरे त्वद्योधाः शूरमानिनः । १९५५
शलभा इव ते दीप्तमग्निं प्राप्य ययुः क्षयं । एवं सम्मृद्नन् शत्रूणां जीवितानि यशांसि च ।
पार्थश्चचार संग्रामे मृत्युर्विग्रहवानिव । सकिरीटानि वक्त्राणि साङ्गदान् विपुलान् भुजान् ।
सकुण्डलयुगान् कर्णान् द्विषां निरहरच्छरैः । सतोमरान् गजस्थानां सप्रासान् हयसादिनां ।
सचर्म्मणः पदातीनां रथिनाञ्च सधन्वनः । सप्रतोदान्नियन्तॄणां बाहूंश्चिच्छेद पाण्डवः ।
स दीप्ताग्रशरार्चिष्मान् बभौ तत्र धनञ्जयः । सविस्फुलिङ्गाग्रशिखो ज्वलन्निव हुताशनः । १९६०
तं देवराजप्रतिमं सर्व्वशस्त्रभृतां वरं । युगपद्दिक्षु सर्व्वासु रथस्थं पुरुषर्षभं ।
निक्षिपन्तं महास्त्राणि प्रेक्षणीयं धनञ्जयं । नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनादितं ।
निरीक्षितुं न शेकुस्ते यतमानोऽपि पार्थिवाः । मध्यन्दिनगतं सूर्य्यं प्रतपन्तमिवाम्बरे ।
दीप्तोग्रसंयतशरः किरीटी विरराज ह । वर्षास्विवोदीर्णजलः सेन्द्रधन्वाम्बुदो महान् ।
महास्त्रसंप्लवे तस्मिन् जिष्णुना सम्प्रवर्त्तिते । सुदुस्तरे महाघोरे ममज्जुर्योधपुङ्गवाः । १९६५
उत्कृत्तवदनैर्देहैः शरीरैः क्षतबाहुभिः । भुजैश्च पाणिनिर्मुक्तैः पाणिभिर्व्यङ्गुलीकृतैः ।
कृत्ताग्रहस्तैः करिभिः कृत्तदन्तैर्मदोत्कटैः । हयैश्च विधुरग्रीवैरथैश्च शकलीकृतैः ।
निकृत्तान्त्रैः कृत्तपादैस्तथाऽन्यैः कृत्तसन्धिभिः । निश्चेष्टैर्विस्फुरद्भिश्च शतशोऽथ सहस्रशः ।
मृत्योराघातललितं तत्पार्थायोधनं महत् । अपश्याम महीपाल भीरूणां भयवर्द्धनं ।
आक्रीडमिव रुद्रस्य पुराऽभ्यर्द्दयतः पशून् । गजानां क्षुरनिर्मुक्तैः करैः सभुजगेव भूः । १९७०
क्वचिद्बभौ स्रग्विणीव वक्त्रपद्मैः समाचिता । विचित्रोष्णीषमुकुटैः केयूराङ्गदकुण्डलैः ।
स्वर्णचित्रतनुत्रैश्च भाण्डैश्च गजवाजिनां । किरीटशतसङ्कीर्णा तत्र तत्र समाचिता ।
विरराज भृशं क्षमा सा नववधूरिव । मज्जामेदःकर्द्दमिनी शोणितौघतरङ्गिणी ।
मर्म्मास्थिभिरगाधा च केशशैवलशाद्वला । शिरोबाहुपलतटा रुग्णोर्वस्थिसङ्कटा ।
चित्रध्वजपताकाढ्या छत्रचापोर्म्मिमालिनी । विगतासुमहाकाया गजदेहाभिसङ्कुला । १९७५
रथोडुपशताकीर्णा हयसङ्घातरोधसा । रथचक्रयुगेषाक्षकूबरैरतिदुर्गमा ।

प्रासासिशक्तिपरश्वधविशिखाच्छिद्रुरासदाम्। वलकङ्कमहामत्स्यां गोमायुमकरोत्कटाम्।
मेदोमज्जमहाग्राहां शिवाभिरुतभैरवाम्। नृत्यत्प्रेतपिशाचाद्यैर्भूताकीर्णां सहस्रशः।
गतासुयोधनिश्चेष्टशरीरशतवाहिनीम्। महाप्रतिभयां रौद्रां घोरां वैतरणीमिव।
नदीं प्रवर्त्तयामास भीरूणां भयवर्द्धिनीम्। तं दृष्ट्वा तस्य विक्रान्तमनन्तकसेव रूपिनं। ६२९०
अभूतपूर्व्वं कुरुषु भयमागाद्रणाजिरे। तत आदाय वीराणामस्त्रैरस्त्राणि पाण्डव।
आत्मानं रौद्रमाचष्ट रौद्रकर्म्मणि धिष्ठितः। ततो रथवरानाजावत्यतिक्रामदर्जुनः।
मध्यन्दिनगतं सूर्य्यं प्रतपन्तमिवाम्बरे। नाशकन् सर्व्वभूतानि पाण्डवं प्रतिवीक्षितुं।
प्रच्युतान् तस्य गाण्डीवाच्छरजालान्महात्मनः। संग्रामे सम्प्रपश्यामो हंसपङ्क्तीरिवाम्बरे।
विनिवार्य्य स वीराणामस्त्रैरस्त्राणि सर्व्वशः। दर्शयन् रौद्रमात्मानमुग्रे कर्म्मणि धिष्ठितः। ६२९५
स तान् रथवरान् राजन्नत्यक्रामत्तदाऽर्जुनः। मोहयन्निव नाराचैर्जयद्रथवधैषया।
विसृजन् दिक्षु सर्व्वासु शरानसितसारथिः। स रणे व्यचरत्तूर्णं प्रेक्षणीयो धनञ्जयः।
भ्रमन्त इव शूरस्य शरव्राता महात्मनः। अदृश्यन्तान्तरीक्षस्थाः शतशोऽथ सहस्रशः।
आददानं महेष्वासं सन्दधानञ्च पाण्डवं। विसृजन्तञ्च कौन्तेयं नानुपश्यामहे तदा।
तथा सर्व्वा दिशो राजन् सर्व्वांश्च रथिनो रणे। आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत्। ६३००
विव्याध च चतुःषष्ट्या शराणां नतपर्व्वणां। सैन्धवाभिमुखं यान्तं योधाः सम्प्रेक्ष्य पाण्डवं।
न्यवर्त्तन्त रणाद्वीरा निराशास्तस्य जीविते। यो योऽभ्यधावदाक्रन्दे तावकः पाण्डवं रणे।
तस्य तस्यान्तगो वाणः शरीरे न्यपतत्प्रभो। कबन्धसङ्कुलञ्चक्रे तव सैन्यं महारथः।
अर्जुनो जयतां श्रेष्ठः शरैरग्न्यर्कसन्निभैः। एवं तत्तव राजेन्द्र चतुरङ्गबलं तदा।
आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत्। द्रौणिं पञ्चाशताऽविध्यद्वृषसेनं त्रिभिः शरैः। ६३०५
कृपायमाणः कौन्तेयः कृपमष्टभिरार्द्दयन्। शल्यं षोडशभिर्व्वाणैः कर्णं द्वात्रिंशता शरैः।
सैन्धवञ्च चतुःषष्ट्या विद्ध्वा सिंह इवानदत्। सैन्धवस्तु तदा विद्धः शरैर्गाण्डीवधन्वना।
न चक्षमे सुसंक्रुद्धस्तोत्त्रार्द्दित इव द्विपः। स वराहध्वजस्तूर्णं गार्द्ध्रपत्रानजिह्मगान्।
आशीविषसमप्रख्यान् कर्म्मारपरिमार्जितान्। आकर्णपूर्णान् चिक्षेप फाल्गुनस्य रथम्प्रति।
त्रिभिस्तु विद्ध्वा गोविन्दं नाराचैः षड्भिरर्जुनं। अष्टाभिर्व्वाजिनोऽविध्यद्ध्वजञ्चैकेन पत्रिणा। ६३१०
स विक्षिप्यार्जुनस्तीक्ष्णान् सैन्धवप्रहिताञ्छरान्। युगपत्तस्य चिच्छेद शराभ्यां सैन्धवस्य ह।
सारथेश्च शिरः कायात् ध्वजञ्च समलङ्कृतं। स च्छिन्नयष्टिः सुमहाञ्छीर्य्यमाणः शराहतः।
वराहः सिन्धुराजस्य पपाताग्निशिखोपमः। एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे।
अब्रवीत् पाण्डवं तत्र त्वरमाणो जनार्द्दनः। एष मध्ये कृतः षड्भिः पार्थ वीरैर्महारथैः।
जीवितेप्सुर्महावाहो भीतस्तिष्ठति सैन्धवः। एताननिर्ज्जित्य रणे षड्रथान् पुरुषर्षभ। ६३१५
न शक्यः सैन्धवो हन्तुं यत्तो निर्व्याजमर्जुन। योगमत्र विधास्यामि सूर्य्यस्यावरणं प्रति।

न्यवधीत् सायकैर्घोरैः सिन्धुराजस्य रक्षिणः । कर्णं द्रौणिं कृपं शल्यं वृषसेनं सुयोधनं ।
छादयामास तीव्रेण शरजालेन पाण्डवः । न सन्दधद्विचिन्वानश्च मुञ्चन्नापि सन्दधन् ।
अदृश्यतार्ज्जुनं सङ्ख्ये शीघ्रास्त्रत्वात् कथञ्चन । धनुर्म्मण्डलमेवास्य दृश्यते स्मास्यतः सदा ।
सायकाश्च व्यदृश्यन्त निश्चरन्तः समन्ततः । कर्णस्य तु धनुश्छित्वा वृषसेनस्य चैव ह । ६११०
शल्यस्य सूतं भल्लेन रथनीडादपातयत् । गाढविद्धावुभौ कृत्वा शरैः स्वस्रीयमातुलौ ।
अर्ज्जुनो जयतां श्रेष्ठो द्रौणिशारद्वतौ रणे । एवं तान् व्याकुलीकृत्य त्वदीयानां महारथान् ।
उज्जहार शरं घोरं पाण्डवोऽनलसन्निभम् । इन्द्राशनिसमस्पर्शं दिव्यमन्त्राभिमन्त्रितं ।
सर्व्वभारसहं शश्वत् गन्धमाल्यार्च्चितं महत् । वज्रास्त्रेण संयोज्य विधिवत् कुरुनन्दनः ।
समादधन्महाबाहुर्गाण्डीवे क्षिप्रमर्ज्जुनः । तस्मिन् सन्धीयमाने तु शरे ज्वलनतेजसि । ६११५
अन्तरीक्षे महानादो भूतानामभवन्नृप । अब्रवीच्च पुनस्तत्र त्वरमाणो जनार्द्दनः ।
धनञ्जय शिरश्छिन्धि सैन्धवस्य दुरात्मनः । अस्तं महीधरं श्रेष्ठं यियासति दिवाकरः ।
शृणुष्वैव च मे वाक्यं जयद्रथवधं प्रति । वृद्धक्षत्रः सैन्धवस्य पिता जगति विश्रुतः ।
स कालेनेह महता सैन्धवं प्राप्तवान् सुतं । जयद्रथममित्रघ्नं वागुवाचाशरीरिणी ।
नृपमन्तर्हिता वाणी मेघदुन्दुभिनिःस्वना । तवात्मजोऽयं मर्त्त्येषु कुलशीलदमादिभिः । ६१२०
गुणैर्भविष्यति विभो सदृशो वंशयोर्द्वयोः । क्षत्रियप्रवरो लोके नित्यं शूराभिसत्कृतः ।
किन्त्वस्य युध्यमानस्य सङ्ग्रामे क्षत्रियर्षभः । शिरश्छेत्स्यति संक्रुद्धः शत्रुरालक्षितो भुवि ।
एतच्छ्रुत्वा सिन्धुराजो ध्यात्वा चिरमरिन्दम । ज्ञातीन् सर्व्वानुवाचेदं पुत्रस्नेहाभिपीडितः ।
सङ्ग्रामे युध्यमानस्य वहतो महतीं धुरं । धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः ।
तस्यापि शतधा मूर्द्धा फलिष्यति न संशयः । एवमुक्त्वा ततो राज्ये स्थापयित्वा जयद्रथं । ६१२५
वृद्धक्षत्रो वनं यातस्तपश्चेष्टं समास्थितः । सोऽयं तपति तेजस्वी तपो घोरं दुरासदं ।
समन्तपञ्चकादस्माद्बहिर्व्वानरकेतन । तस्माज्जयद्रथस्य त्वं शिरश्छित्वा महामृधे ।
दिव्येनास्त्रेण रिपुहन् घोरेणाद्भुतकर्म्मणा । सकुण्डलं सिन्धुपतेः प्रभञ्जनसुतानुज ।
उत्सङ्गे पातयस्वाशु वृद्धक्षत्रस्य भारत । अथ त्वमस्य मूर्द्धानं पातयिष्यसि भूतले ।
तवापि शतधा मूर्द्धा फलिष्यति न संशयः । यथा चैतन्न जानीयात् स राजा पृथिवीपतिः । ६१३०
तथा कुरु कुरुश्रेष्ठ दिव्यमस्त्रमुपाश्रितः । न ह्यसाध्यमकार्य्यं वा विद्यते तव किञ्चन ।
समस्तेष्वपि लोकेषु त्रिषु वासवनन्दन । एतच्छ्रुत्वा तु वचनं सृक्किणी परिसंलिहन् ।
इन्द्राशनिसमस्पर्शं दिव्यं मन्त्राभिमन्त्रितं । सर्व्वभारसहं शश्वद्गन्धमाल्यार्च्चितं शरं ।
विससर्ज्जार्ज्जुनस्तूर्णं सैन्धवस्य वधे धृतः । स तु गाण्डीवनिर्मुक्तः शरः श्येन इवाशुगः । ६१३४
शकुन्तमिव वृक्षाग्रात् सैन्धवस्य शिरोऽहरत् । अहरत्तत् पुनश्चैव शरैरूर्द्ध्वं धनञ्जयः ।
दुर्हृदामप्रहर्षाय सुहृदां हर्षणाय च । शरैः कदम्बकीकृत्य काले तस्मिंश्च पाण्डवः ।

समन्तपञ्चकाद्बाह्यं शिरस्तस्य महीपतेः । एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः ।
सन्ध्यामुपास्ते तेजस्वी सम्बन्धी तव मारिष । उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलं ।
सिन्धुराजस्य मूर्द्धानमुत्सङ्गे समपातयत् । तस्योत्सङ्गे निपतितं शिरस्तच्चारुकुण्डलं ।
वृद्धक्षत्रस्य नृपतेरलक्षितमरिन्दम । कृतजप्यस्य तस्याथ वृद्धक्षत्रस्य धीमतः । ६१८०
उत्तिष्ठतस्तत् सहसा शिरोऽगच्छद्धरातलं । ततस्तस्य नरेन्द्रस्य पुत्रमूर्द्धनि भूतलं ।
गते तस्यापि शतधा मूर्द्धाऽगच्छदरिन्दम । ततः सर्वाणि भूतानि विस्मयं जग्मुरुत्तमं ।
वासुदेवश्च बीभत्सुं प्रशशंस महाहवे । ततो विनिहते राजन् सिन्धुराजे किरीटिना ।
तमस्तद्वासुदेवेन संहृतं भरतर्षभ । पश्चाज्ज्ञातं महीपाल तव पुत्रैः सहानुगैः ।
वासुदेवप्रयुक्तेयं मायेति नृपसत्तम । एवं स निहतो राजन् पार्थेनामिततेजसा । ६१८५
अक्षौहिणीरष्ट हत्वा जामाता तव सैन्धवः । ततो दृष्ट्वा विनिहतं सिन्धुराजं जयद्रथं ।
पुत्राणां तव नेत्रेभ्यो दुःखादभ्यपतज्जलं । ततो जयद्रथे राजन् हते पार्थेन केशवः ।
दध्मौ शङ्खं महाबाहुरर्जुनश्च परन्तपः । भीमसेनोऽपि सङ्ग्रामे बोधयन्निव पाण्डवं ।
सिंहनादेन महता पूरयामास रोदसी । तं श्रुत्वा तु महानादं धर्मपुत्रो युधिष्ठिरः ।
सैन्धवं निहतं मेने फाल्गुनेन महात्मना । ततो वादित्रघोषेण स्वयोधानभ्यहर्षयत् । ६१९०
अभ्यवर्त्तत सङ्ग्रामे भारद्वाजं युयुत्सया । ततः प्रववृते राजन्नस्तं गच्छति भास्करे ।
द्रोणस्य सोमकैः सार्द्धं सङ्ग्रामो लोमहर्षणः । ते तु सर्वप्रयत्नेन भारद्वाजं जिघांसवः ।
सैन्धवे निहते राजन्नयुध्यन्त महारथाः । पाण्डवास्तु जयं लब्ध्वा सैन्धवं विनिहत्य च ।
अयोधयंस्ततो द्रोणं जयोन्मत्तास्ततस्ततः । अर्जुनोऽपि रणे योधांस्तावकान् रथसत्तमान् ।
अयोधयन्महाराज हत्वा सैन्धवं नृपं । ६१९५
स देवशत्रूनिव देवराजः किरीटमाली व्यधमत्समन्तात् । यथा तमांस्यभ्युदितस्तमोघ्नः पूर्वां प्रतिज्ञां समवाप्य वीरः ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि जयद्रथवधे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

॥ धृतराष्ट्र उवाच ॥ तस्मिन्विनिहते वीरे सैन्धवे सव्यसाचिना । मामका यदकुर्वन्त तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ सैन्धवं निहतं दृष्ट्वा रणे पार्थेन मारिष । अमर्षवशमापन्नः कृपः शारद्वतस्तथा ।
महता शरवर्षेण पाण्डवं समवाकिरत् । द्रौणिश्चाभ्यद्रवत् पार्थं रथमास्थाय फाल्गुनं ।
तावेतौ रथिनां श्रेष्ठौ रथाभ्यां रथसत्तमौ । उभावुभयतस्तीक्ष्णैर्विशिखैरभ्यवर्षतां । ६२००
स तया शरवर्षाभ्यां सुमहद्भ्यां महाभुजः । पीड्यमानः परामार्त्तिमगमद्रथिनाम्वरः ।
स जिघांसुर्गुरुं सङ्ख्ये गुरोस्तनयमेव च । चकाराचार्य्यकं तत्र कुन्तीपुत्रो धनञ्जयः ।
अस्त्रैरस्त्राणि संवार्य्य द्रौणेः शारद्वतस्य च । मन्दवेगानिषूंस्ताभ्यामजिघांसुरवासृजत् ।
ते चापि भृशमभ्यघ्नन् विशिखा जयचोदिताः । बहुत्वात्तु परामार्त्तिं शराणान्तावगच्छतां ।
अथ शारद्वतो राजन् कौन्तेयशरपीडितः । अवासीदद्रथोपस्थे मूर्च्छामभिजगाम ह । ६२०५

विक्लवन्तमभिप्राय भर्त्तारं शरपीडितं। हतोऽयमिति च ज्ञात्वा सारथिस्तमपाहरत्।
तस्मिन् भग्ने महाराज कृपे शारद्वते युधि। अश्वत्थामाऽप्यपायासीत् पाण्डवेयाद्रथान्तरं।
दृष्ट्वा शारद्वतं पार्थो मूर्च्छितं शरपीडितं। रथएव महेष्वासः कृपणं पर्य्यदेवयत्।
अश्रुपूर्णमुखो दीनो वचनञ्चेदमब्रवीत्। पश्यन्निदं महाप्राज्ञः क्षत्ता राजानमुक्तवान्। १११०
कुलान्तकरणे पापे जातमात्रे सुयोधने। नीयतां परलोकाय साध्वयं कुलपांसनः।
अस्माद्धि कुरुमुख्यानां महदुत्पत्स्यते भयं। तदिदं समनुप्राप्तं वचनं सत्यवादिनः।
तत्कृते ह्यद्य पश्यामि शरतल्पगतं गुरुं। धिगस्तु क्षात्रमाचारं धिगस्तु बलपौरुषं।
को हि ब्राह्मणमाचार्य्यमभिद्रुह्येत मादृशः। ऋषिपुत्रो ममाचार्य्यो द्रोणस्य दयितः सखा।
एष शेते रथोपस्थे मद्बाणैरभिपीडितः। अकामयानेन मया विशिखैरर्द्दितो भृशं। १११५
अवसीदन् रथोपस्थे प्राणान् पीडयतीव मे। शरार्द्दितेन हि मया प्रेक्षणीयो महाद्युतिः।
अभ्यस्तो बहुभिर्बाणैर्दशधर्मगतेन वै। शोचयत्येष नियतं भूयः पुत्रवधाद्धि मां।
कृपणं स्वरथे सन्नं पश्य कृष्ण यथागतं। उपाकृत्य तु वै विद्यामाचार्य्येभ्यो नरर्षभाः।
प्रयच्छन्तीह ये कामान् देवत्वमुपयान्ति ते। ये तु विद्यामुपादाय गुरुभ्यः पुरुषाधमाः।
घ्नन्ति तानेव दुर्वृत्तास्ते वै निरयगामिनः। तदिदं नरकायाद्य कृतं कर्म मया ध्रुवं। ११२०
आचार्य्यं शरवर्षेण रथे सादयता भृशं। यत्तत्पूर्व्वमुपाकुर्व्वन्नस्त्रं मामब्रवीत् कृपः।
न कथञ्चन कौरव्य प्रहर्त्तव्यं गुराविति। तदिदं वचनं साधोराचार्य्यस्य महात्मनः।
नानुष्ठितं तमेवाजौ विशिखैरभिवर्षता। नमस्तस्मै सुपूज्याय गौतमायापलायिने।
धिगस्तु मम वार्ष्णेय यो ह्यस्मै प्रहराम्यहं। तथा विलपमाने तु सव्यसाचिनि तं प्रति।
सैन्धवं निहतं दृष्ट्वा राधेयः समुपाद्रवत्। तमापतन्तं राधेयमर्ज्जुनस्य रथं प्रति। ११२५
पाञ्चाल्यौ सात्यकिश्चैव सहसा समुपाद्रवन्। उपायान्तन्तु राधेयं दृष्ट्वा पार्थो महारथः।
प्रहसन् देवकीपुत्त्रमिदं वचनमब्रवीत्। एष प्रयात्याधिरथिः सात्यकेः स्यन्दनं प्रति।
न मृष्यति हतं नूनं भूरिश्रवसमाहवे। यत्र यात्येष तत्र त्वं चोदयाश्वान् जनार्दन।
मा सोमदत्तेः पदवीं गमयेत् सात्वतं वृषः। एवमुक्तो महाबाहुः केशवः सव्यसाचिना।
प्रत्युवाच महातेजाः कालयुक्तमिदं वचः। अलमेष महाबाहुः कर्णायैको हि पाण्डव।
किम्पुनर्द्रौपदेयाभ्यां सहितः सात्वतर्षभः। न च तावत् क्षमः पार्थ कर्णेन तव सङ्गरः।
प्रज्वलन्ती महोल्केव तिष्ठत्यस्य हि वासवी। त्वदर्थं पूज्यमाना वै रक्ष्यते परवीरहन्।
अतः कर्णः प्रयात्वत्र सात्वतस्य यथातथा। अहं ज्ञास्यामि कौन्तेय कालमस्य दुरात्मनः।
यत्रैनं विशिखैस्तीक्ष्णैः पातयिष्यसि भूतले।
। धृतराष्ट्र उवाच॥ योऽसौ कर्णेन वीरेण वार्ष्णेयस्य समागमः। हते च भूरिश्रवसि सैन्धवे
सात्यकिश्चापि विरथः कं समारूढवान् रथं। चक्ररक्षौ तु पाञ्चाल्यौ तन्ममाचक्ष्व सञ्जय।

समन्तपञ्चकाद्बाह्यं शिरस्तस्य महीपतेः । एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः ।
सन्ध्यामुपास्ते तेजस्वी सम्बन्धी तव मारिष । उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलम् ।
सिन्धुराजस्य मूर्द्धानमुत्सङ्गे समपातयत् । तस्योत्सङ्गे निपतितं शिरस्तच्चारुकुण्डलम् ।
वृद्धक्षत्रस्य नृपतेरलक्षितमरिन्दम । कृतजप्यस्य तस्याथ वृद्धक्षत्रस्य धीमतः । ६३८०
उत्तिष्ठतस्तत् सहसा शिरोऽगच्छद्धरातलम् । ततस्तस्य नरेन्द्रस्य पुत्रमूर्द्धनि भूतलम् ।
गते तस्यापि शतधा मूर्द्धाऽगच्छदरिन्दम । ततः सर्व्वाणि भूतानि विस्मयं जग्मुरुत्तमम् ।
वासुदेवञ्च बीभत्सुं प्रशशंसुर्महारथम् । ततो विनिहते राजन् सिन्धुराजे किरीटिना ।
तमस्तद्वासुदेवेन संहृतं भरतर्षभ । पश्चाज्ज्ञातं महीपाल तव पुत्रैः सहानुगैः ।
वासुदेवप्रयुक्तेयं मायेति नृपसत्तम । एवं स निहतो राजन् पार्थेनामिततेजसा । ६३८५
अक्षौहिणीरष्ट हत्वा जामाता तव सैन्धवः । ततो दृष्ट्वा विनिहतं सिन्धुराजं जयद्रथम् ।
पुत्राणां तव नेत्रेभ्यो दुःखाद्बाष्पमपतद्भृशम् । ततो जयद्रथे राजन् हते पार्थेन केशवः ।
दध्मौ शङ्खं महाबाहुरर्जुनश्च परन्तपः । भीमसेनोऽपि सङ्ग्रामे बोधयन्निव पाण्डवम् ।
सिंहनादेन महता पूरयामास रोदसी । तं श्रुत्वा तु महानादं धर्म्मपुत्रो युधिष्ठिरः ।
सैन्धवं निहतं मेने फाल्गुनेन महात्मना । ततो वादित्रघोषेण स्वयोधानभ्यहर्षयत् । ६३९०
अभ्यवर्त्तत सङ्ग्रामे भारद्वाजं युयुत्सया । ततः प्रववृते राजन्नस्तं गच्छति भास्करे ।
द्रोणस्य सोमकैः सार्द्धं सङ्ग्रामो लोमहर्षणः । ते तु सर्व्वप्रयत्नेन भारद्वाजं जिघांसवः ।
सैन्धवे निहते राजन्नयुध्यन्त महारथाः । पाण्डवास्तु जयं लब्ध्वा सैन्धवं विनिहत्य च ।
अयोधयंस्ततो द्रोणं जयोन्मत्तास्ततस्ततः । अर्ज्जुनोऽपि रणे योधांस्तावकान् रथसत्तमान् ।
अयोधयन्महाराज हत्वा सैन्धवं नृपम् । ६३९५
स देवशत्रूनिव देवराजः किरीटमाली व्यधमत् समन्तात् । यथा तमांस्यभ्युदितस्तमोघ्नः पूर्व्वां प्रतिज्ञां समवाप्य वीरः ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि जयद्रथवधे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥
॥ धृतराष्ट्र उवाच ॥ तस्मिन् विनिहते वीरे सैन्धवे सव्यसाचिना । मामका यदकुर्व्वन्त तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ सैन्धवं निहतं दृष्ट्वा रणे पार्थेन मारिष । अमर्षवशमापन्नः कृपः शारद्वतस्तथा ।
महता शरवर्षेण पाण्डवं समवाकिरत् । द्रौणिश्चाभ्यद्रवत् पार्थं रथमास्थाय फाल्गुनम् ।
तावेतौ रथिनां श्रेष्ठौ रथाभ्यां रथसत्तमौ । उभावुभयतस्तीक्ष्णैर्विशिखैरभ्यवर्षताम् । ६४००
स तथा शरवर्षाभ्यां सुमहद्भ्यां महाभुजः । पीड्यमानः परामार्त्तिमगमद्रथिनाम्वरः ।
स जिघांसुर्गुरुं सङ्ख्ये गुरोस्तनयमेव च । चकाराचार्य्यकं तत्र कुन्तीपुत्रो धनञ्जयः ।
अस्त्रैरस्त्राणि संवार्य्य द्रौणेः शारद्वतस्य च । मन्दवेगानिषूंस्ताभ्यामजिघांसुरवासृजत् ।
ते चापि भृशमभ्यघ्नन् विशिखा जयचोदिताः । बहुत्वात्तु परामार्त्तिं शराणान्तावगच्छताम् ।
अथ शारद्वतो राजन् कौन्तेयशरपीडितः । अवासीदद्रथोपस्थे मूर्च्छामभिजगाम ह । ६४०५

विकत्थनमभिप्राय भर्त्तारं शरपीडितं । हतोऽयमिति च ज्ञात्वा सारथिस्तमपाहरत् ।
तस्मिन् भग्ने महाराज कृपे शारद्वते युधि । अश्वत्थामाऽप्यपायासीत् पाण्डवेयाद्रथान्तरं ।
दृष्ट्वा शारद्वतं पार्थो मूर्च्छितं शरपीडितं । रथएव महेष्वासः कृपणं पर्य्यदेवयत ।
अश्रुपूर्णमुखो दीनो वचनञ्चेदमब्रवीत् । पश्यन्निदं महाप्राज्ञः क्षत्ता राजानमुक्तवान् ।
कुलान्तकरणे पापे जातमात्रे सुयोधने । नीयतां परलोकाय साध्वयं कुलपांसनः ।            ६६१०
अस्माद्धि कुरुमुख्यानां महदुत्पत्स्यते भयं । तदिदं समनुप्राप्तं वचनं सत्यवादिनः ।
तत्कृते ह्यद्य पश्यामि शरतल्पगतं गुरुं । धिगस्तु क्षात्रमाचारं धिगस्तु बलपौरुषं ।
को हि ब्राह्मणमाचार्य्यमभिद्रुह्येत मादृशः । ऋषिपुत्रो ममाचार्य्यो द्रोणस्य दयितः सखा ।
एष शेते रथोपस्थे मद्बाणैरभिपीडितः । अकामयानेन मया विशिखैरर्द्दितो भृशं ।
अवसीदन् रथोपस्थे प्राणान् पीडयतीव मे । शरार्द्दितेन हि मया प्रेक्षणीयो महाद्युतिः ।            ६६१५
अभ्यस्तो बहुभिर्बाणैर्दशधर्म्मगतेन वै । शोचयत्येव नितरां भूयः पुत्रवधाद्धि मां ।
कृपणं स्वरथे सन्नं पश्य कृष्ण यथागतं । उपाकृत्य तु वै विद्यामाचार्य्येभ्यो नरर्षभाः ।
प्रयच्छन्तीह ये कामान् देवत्वमुपयान्ति ते । ये तु विद्यामुपादाय गुरुभ्यः पुरुषाधमाः ।
घ्नन्ति तानेव दुर्वृत्तास्ते वै निरयगामिनः । तदिदं नरकायाद्य कृतं कर्म्म मया ध्रुवं ।
आचार्य्यं शरवर्षेण रथे सादयता कृपं । यत्तत्पूर्व्वमुपाकुर्व्वन्नस्त्रं मामब्रवीत् कृपः ।            ६६२०
न कथञ्चन कौरव्य प्रहर्त्तव्यं गुराविति । तदिदं वचनं साधोराचार्य्यस्य महात्मनः ।
नानुष्ठितं तमेवाजौ विशिखैरभिवर्षता । नमस्तस्मै सुपूज्याय गौतमायापलायिने ।
धिगस्तु मम वार्ष्णेय यो ह्यस्मै प्रहराम्यहं । तथा विलपमाने तु सव्यसाचिनि तम्प्रति ।
सैन्धवं निहतं दृष्ट्वा राधेयः समुपाद्रवत् । तमापतन्तं राधेयमर्ज्जुनस्य रथं प्रति ।
पाञ्चाल्यौ सात्यकिश्चैव सहसा समुपाद्रवन् । उपायान्तन्तु राधेयं दृष्ट्वा पार्थो महारथः ।            ६६२५
प्रहसन्देवकीपुत्रमिदं वचनमब्रवीत् । एष प्रयात्याधिरथिः सात्यकेः स्यन्दनम्प्रति ।
न मृष्यति हतं नूनं भूरिश्रवसमाहवे । यत्र यात्येष तत्र त्वं चोदयाश्वान् जनार्द्दन ।
मा सौमदत्तेः पदवीं गमयेत् सात्वतं वृषः । एवमुक्तो महाबाहुः केशवः सव्यसाचिना ।
प्रत्युवाच महातेजाः कालयुक्तमिदं वचः । अलमेष महाबाहुः कर्णायैको हि पाण्डव ।
किम्पुनर्द्रौपदेयाभ्यां सहितः सात्वतर्षभः । न च तावत्क्षमः पार्थ कर्णेन तव सङ्गरः ।            ६६३०
प्रज्वलन्ती महोल्केव तिष्ठत्यस्य हि वासवी । त्वदर्थं पूज्यमाना वै रक्ष्यते परवीरहन् ।
अतः कर्णः प्रयात्वत्र सात्वतस्य यथातथा । अहं ज्ञास्यामि कौन्तेय कालमस्य दुरात्मनः ।
यत्रैनं विशिखैस्तीक्ष्णैः पातयिष्यसि भूतले ।
॥ धृतराष्ट्र उवाच ॥ योऽसौ कर्णेन वीरेण वार्ष्णेयस्य समागमः । हते च भूरिश्रवसि सैन्धवे च निपातिते ।
सात्यकिश्चापि विरथः कं समारूढवान् रथं । चक्ररक्षौ तु पाञ्चाल्यौ तन्ममाचक्ष्व सञ्जय ।            ६६३५

॥ सञ्जय उवाच ॥ हन्त ते वर्त्तयिष्यामि यथावृत्तं महारथे। शुश्रूषस्व स्थिरो भूत्वा दुराचरितमात्मनः।
पूर्व्वमेव हि कृष्णस्य मनोगतमिदं प्रभो। विजेतव्यो यथा वीरः सात्यकिर्यूपकेतुना।
अतीतानागते राजन् स हि वेत्ति जनार्दनः। ततः सूतं समाहूय दारुकं सन्दिदेश ह।
रथो मे युज्यतां कल्यमिति राजन्महाबलः। न हि देवा न गन्धर्व्वा न यक्षोरगराक्षसाः।
मानवाश्च विजेतारः कृष्णयोः सन्ति केचन। पितामहपुरोगाश्च देवाः सिद्धाश्च तं विदुः। ६११०
तयोः प्रभावमतुलं शृणु युद्धं तु तत्तथा। सात्यकिं विरथं दृष्ट्वा कर्णञ्चाभ्युद्यतं युधि।
दध्मौ शङ्खं महानादमार्षभेणाथ माधवः। दारुको वेत्ति सन्देशं श्रुत्वा शङ्खस्य चास्वनं।
रथमन्वानयत्तस्मै सुपर्णोच्छ्रितकेतनं। स केशवस्यानुमते रथं दारुकसंयुतं।
आरुरोह शिनेः पौत्रो ज्वलनादित्यसन्निभं। कामगैः शैब्यसुग्रीवमेघपुष्पबलाहकैः।
हयोदग्रैर्महावेगैर्हेमभाण्डविभूषितैः। युक्तं समारुह्य च तं विमानप्रतिमं रथं। ६११५
अभ्यद्रवत राधेयं प्रवपन् सायकान् बहून्। चक्ररक्षावपि तदा युधामन्यूत्तमौजसौ।
धनञ्जयरथं हित्वा राधेयं प्रत्युदीयतुः। राधेयोऽपि महाराज शरवर्षं समुत्सृजन्।
अभ्यद्रवत् सुसंक्रुद्धो रणे शैनेयमच्युतं। नैवं दैवं न गान्धर्व्वं नासुरोरगराक्षसं।
तादृशं भुवि वा युद्धं दिवि वाप्यश्रुम नृप। उपारमत तत्सैन्यं सरथाश्वनरद्विपं।
तयोर्दृष्ट्वा महाराज कर्म्म सम्मूढचेतनं। सर्व्वे च समपश्यन्त तद्युद्धमतिमानुषं। ६१२०
तयोर्नृवरयो राजन् सारथ्यं दारुकस्य च। गतप्रत्यागतावृत्तैर्मण्डलैः सन्निवर्त्तनैः।
सारथेस्तु रथस्थस्य काश्यपेयस्य विस्मिताः। नभस्तलगताश्चैव देवगन्धर्व्वदानवाः।
अतीवावहिता द्रष्टुं कर्णशैनेययो रणं। मित्रार्थे तौ पराक्रान्तौ स्पर्द्धिनौ शुष्मिणौ रणे।
कर्णश्चामरसङ्काशो युयुधानश्च सात्यकिः। अन्योऽन्यं तौ महाराज शरवर्षैरवर्षतां।
प्रममाथ शिनेः पौत्रं कर्णः सायकवृष्टिभिः। अमृष्यमाणो निधनं कौरव्यजलसन्धयोः। ६१२५
कर्णः शोकसमाविष्टो महोरग इव श्वसन्। स शैनेयं रणे क्रुद्धः प्रदहन्निव चक्षुषा।
अभ्यद्रवत वेगेन पुनः पुनररिन्दम। तन्तु सम्प्रेक्ष्य संक्रुद्धं सात्यकिः प्रत्यविध्यत।
महता शरवर्षेण गजः प्रतिगजं यथा। तौ समेत्य नरव्याघ्रौ व्याघ्राविव तरस्विनौ।
अन्योऽन्यं सन्ततक्षाते रणेऽनुपमविक्रमौ। ततः कर्णं शिनेः पौत्रः सर्व्वपारशवैः शरैः।
बिभेद सर्व्वगात्रेषु पुनः पुनररिन्दम। सारथिञ्चास्य भल्लेन रथनीडादपाहरत्। ६१३०
अश्वांश्च चतुरः श्वेतान् निजघ्ने निशितैः शरैः। छित्त्वा ध्वजं शतेनैव शतधा पुरुषर्षभः।
चकार विरथं कर्णं तव पुत्रस्य पश्यतः। ततो विमनसो राजंस्तावका भरतर्षभ।
वृषसेनः कर्णसुतः शल्यो मद्राधिपस्तथा। द्रोणपुत्रश्च शैनेयं सर्व्वतः पर्य्यवारयन्।
ततः पर्य्याकुलं सर्व्वं न प्राज्ञायत किञ्चन। तथा सात्यकिना वीरे विरथे सूतजे कृते।
हाहाकारस्ततो राजन् सर्व्वसैन्येषु चाभवत्। कर्णोऽपि विह्वलो राजन् सात्वतेनार्दितः शरैः। ६१३५

दुर्य्योधनरथं राजन्नारुरोह विनिःश्वसन् । मानयंस्तव पुत्त्रस्य वाक्यमन्ततिं सौहृदं ।
कृतां राज्यप्रदानेन प्रतिज्ञां परिपालयन् । तथा तु विरथे कर्णे पुत्त्रान् वै तव पार्थिव ।
दुःशासनमुखान् शूरान्नावधीत् सात्यकिर्व्वशी । रक्षन् प्रतिज्ञां भीमेन पार्थेन च कृतां पुरा ।
विरथान् विह्वलांश्चक्रे नतु प्राणैर्व्वियोजयत् । भीमसेनेन तु वधः पुत्त्राणान्ते प्रतिश्रुतः ।
पुनर्द्यूते च पार्थेन वधः कर्णस्य संश्रुतः । वधे त्वकुर्व्वन् यत्नं ते तस्य कर्णमुखा रथाः ।  ६६५०
नाशक्नुवंश्च तं हन्तुं सात्यकिं प्रवरा रथाः । द्रौणिश्च कृतवर्म्मा च तथैवान्ये महारथाः ।
निर्ज्जिता धनुषैकेन शतशः क्षत्त्रियर्षभाः । काङ्क्षता परलोकञ्च धर्म्मराजस्य च प्रियं ।
कृष्णयोः सदृशो वीर्य्ये सात्यकिः शत्रुकर्षणः । जितवान् सर्व्वसैन्यानि तावकानि हसन्निव ।
कृष्णो वापि भवेल्लोके पार्थो वापि धनुर्द्धरः । शैनेयो वा नरश्रेष्ठ चतुर्थो नोपलभ्यते ।
॥ धृतराष्ट्र उवाच ॥ अजय्यं रथमास्थाय वासुदेवस्य सात्यकिः । विरथं कृतवान् कर्णं वासुदेवसमो युधि ।  ६६५५
दारुकेण समायुक्तः स्वबाहुबलदर्पितः । कच्चिदन्यं समारूढः स रथं सात्यकिः पुनः ।
एतदिच्छाम्यहं श्रोतुं कुशलो ह्यसि भाषितुं । असह्यं तमहं मन्ये तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ शृणु राजन् यथा तस्य रथमन्यं महामतिः । दारुकस्यानुजस्तूर्णं कल्पनाविधिकल्पितं ।
आयसैः काञ्चनैश्चापि पट्टैः सन्नद्धकूबरं । तारासहस्रखचितं सिंहध्वजपताकिनं ।
अश्वैर्व्वातजवैर्युक्तं हेमभाण्डपरिच्छदैः । रथं सम्पादयामास मेघगम्भीरनिस्वनं ।  ६६६०
तं समारुह्य शैनेयस्तव सैन्यमुपाद्रवत् । दारुकोऽपि यथाकामं प्रययौ केशवान्तिकं ।
कर्णस्यापि महाराज शङ्खगोक्षीरपाण्डुरैः । चित्रकाञ्चनसन्नाहैः सदश्वैर्व्वेगवत्तरैः ।
हेमकक्षाध्वजोपेतं क्लृप्तयन्त्रपताकिनं । अग्र्यं रथं सुयन्तारं बहुशस्त्रपरिच्छदं ।
उपाजह्रुस्तमास्थाय कर्णोऽप्यभ्यद्रवद्रिपून् । एतत्ते सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
भूयश्चापि निबोध त्वं तवापनयजं क्षयं । एकत्रिंशत्तव सुता भीमसेनेन पातिताः ।  ६६६५
दुर्म्मुखं प्रमुखे कृत्वा सततं चित्रयोधिनः । शतशो निहताः शूराः सात्वतेनार्ज्जुनेन च ।
भीष्मं प्रमुखतः कृत्वा भगदत्तञ्च मारिष । एवमेष क्षयो वृत्तो राजन् दुर्म्मन्त्रिते तव ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कर्णसात्यकियुद्धे सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥
॥ धृतराष्ट्र उवाच ॥ तथा गतेषु शूरेषु तेषां मम च संयुगे । किं वै भीमस्तदाकार्षीत् तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ विरथो भीमसेनो वै कर्णवाक्शल्यपीडितः । अमर्षवशमापन्नः फाल्गुनं वाक्यमब्रवीत् ।
पुनः पुनस्तूवरक मूढ औदरिकेति च । अकृतास्त्रक मा योत्सीर्बाल सङ्ग्रामकातर ।  ६६७०
इति मामब्रवीत् कर्णः पश्यतस्ते धनञ्जय । एवं वक्ता च मे वध्यस्तेन चोक्तोऽस्मि भारत ।
एतद्व्रतं महाबाहो त्वया सह कृतं मया । यथैतन्मम कौन्तेय तथा तव न संशयः ।
तद्वधाय नरश्रेष्ठ स्मरैतद्वचनं मम । यथा भवति तत्सत्यं तथा कुरु धनञ्जय ।
तच्छ्रुत्वा वचनं तस्य भीमस्यामितविक्रमः । ततोऽर्ज्जुनोऽब्रवीत् कर्णं किञ्चिदभ्येत्य संयुगे ।

कर्ण कर्ण दृथा दृष्टे सूतपुत्रात्मसंस्तुत । अधर्म्मयुद्धे शृणु मे यत्त्वां वक्ष्यामि साम्प्रतं । ६७९५
द्विविधं कर्म्म शूराणां युद्धे जयपराजयौ । तौ चाप्यनित्यौ राधेय वासवस्यापि युध्यतः ।
मुमूर्षुर्युयुधानेन विरथो विकलेन्द्रियः । मद्वध्यस्त्वमिति ज्ञात्वा जित्वा जीवन्विसर्ज्जितः ।
यदृच्छया भीमसेनं विरथं कृतवानसि । अधर्म्मस्त्वेष राधेय यत्त्वं भीममवोचथाः ।
नार्य्य जित्वा विकत्थन्ते न च जल्पन्ति दुर्व्वचः । न च किञ्चन निन्दन्ति सन्तः शूरा नरर्षभाः ।
त्वन्तु प्राकृतविज्ञानस्तत्तद्वदसि सूतज । युध्यमानं पराक्रान्तं शूरमार्य्यव्रते रतं । ६८००
यदवोचोऽप्रियं भीमं नैतत्सत्यं वचस्तव । पश्यतां सर्व्वसैन्यानां केशवस्य ममैव च ।
विरथो भीमसेनेन कृतोऽसि बहुशो रणे । न च त्वां परुषं किञ्चिदुक्तवान् पाण्डुनन्दनः ।
यस्माद्बहु च रूक्षञ्च श्रावितस्ते वृकोदरः । परोक्षं यच्च सौभद्रो युष्माभिर्निहतो मम ।
तस्मादस्यावलेपस्य सद्यः फलमवाप्नुहि । त्वया तस्य धनुश्छिन्नमात्मनाशाय दुर्म्मते ।
तस्माद्वध्योऽसि मे मूढ सभृत्यबलवाहनः । कुरु त्वं सर्व्वकृत्यानि महत्ते भयमागतं । ६८०५
हन्तास्मि वृषसेनं ते प्रेक्षमाणस्य संयुगे । ये चान्ये त्वामुपयास्यन्ति बुद्धिमोहेन मां नृपाः ।
तांश्च सर्व्वान् हनिष्यामि सत्येनायुधमालभे । त्वाञ्च मूढाकृतप्रज्ञमतिमानिनमाहवे ।
दृष्ट्वा दुर्य्योधनो मन्दो भृशं तप्स्यति पातितं । अर्ज्जुनेन प्रतिज्ञाते वधे कर्णसुतस्य तु ।
महान् सुतुमुलः शब्दो बभूव रथिनां तदा । तस्मिन्नाकुलसङ्ग्रामे वर्त्तमाने भयावहे ।
मन्दरश्मिः सहस्रांशुरस्तं गिरिमुपागमत् । ततो राजन् हृषीकेशः सङ्ग्रामशिरसि स्थितः । ६८१०
तीर्णप्रतिज्ञं बीभत्सुं परिष्वज्येदमब्रवीत् । दिष्ट्या सम्पादिता जिष्णो प्रतिज्ञा महती त्वया ।
दिष्ट्या च निहतः पापो वृद्धक्षत्रः सहात्मजः । धार्त्तराष्ट्रबलं प्राप्य देवसेनापि भारत ।
सीदेत समरे जिष्णो नात्र कार्य्या विचारणा । न तं पश्यामि लोकेषु चिन्तयन् पुरुषं क्वचित् ।
त्वदृते पुरुषव्याघ्र य एतद्योधयेद्बलं । महाप्रभावा बहवस्त्वया तुल्याधिकापि वा ।
समेताः पृथिवीपाला धार्त्तराष्ट्रस्य कारणात् । न त्वां प्राप्य रणे क्रुद्धं नाभ्यवर्त्तन्त दंशिताः । ६८१५
तव वीर्य्यं बलञ्चैव रुद्रशक्रान्तकोपमं । नेदृशं शक्नुयात् कश्चिद्रणे कर्त्तुं पराक्रमं ।
यादृशं कृतवानद्य त्वमेकः शत्रुतापनः । एवमेव हते कर्णे सानुबन्धे दुरात्मनि ।
वर्द्धयिष्यामि भूयस्त्वां विजितारिं हतद्विषं । तमर्ज्जुनः प्रत्युवाच प्रसादात्तव माधव ।
प्रतिज्ञेयं मया तीर्णा विबुधैरपि दुस्तरा । अनाश्चर्य्यो जयस्तेषां येषां नाथोऽसि केशव ।
त्वत्प्रसादान्महीं कृत्स्नां सम्प्राप्स्यति युधिष्ठिरः । तवैव भारो वार्ष्णेय तवैव विजयः प्रभो । ६८२०
वर्द्धनीयास्तव वयं प्रेष्याश्च मधुसूदन । एवमुक्तः स्मयन् कृष्णः शनकैर्व्वाहयन् हयान् ।
दर्शयामास पार्थाय क्रूरमायोधनं महत् ।
॥ कृष्ण उवाच ॥ प्रार्थयन्तो जयं युद्धे प्रथितञ्च महद्यशः । पृथिव्यां शेरते शूराः पार्थिवास्त्वच्छरैर्हताः ।
विकीर्णशस्त्राभरणा विपन्नाश्वरथद्विपाः । सञ्छिन्नभिन्नवर्म्माणो वैक्लव्यं परमं गताः ।

हतसत्त्वा गतसत्त्वाश्च प्रभया परया युताः । सजीवा इव लक्ष्यन्ते गतसत्त्वा नराधिपाः ।
तेषां शरैः स्वर्णपुङ्खैः शस्त्रैश्च विविधैस्तथा । वाहनैरायुधैश्चैव सम्पूर्णां पश्य मेदिनीं ।
वर्म्मभिर्म्मणिहारैश्च शिरोभिश्च सकुण्डलैः । उष्णीषमुकुटैः स्रग्भिश्चूडामणिभिरेव च ।
कण्ठसूत्रैरङ्गदैश्च निष्कैरपि च सुप्रभैः । अन्यैश्चाभरणैश्चित्रैर्भाति भारत मेदिनी ।
अनुकर्षैरुपासङ्गैः पताकाभिर्ध्वजैस्तथा । उपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
चक्रैः प्रमथितैश्चित्रैरक्षैश्च बहुधा रणे । युगैर्योक्त्रैः कलापैश्च धनुर्भिः सायकैस्तथा ।
परिस्तोमैः कुथाभिश्च परिघैरङ्कुशैस्तथा । शक्तिभिर्भिन्दिपालैश्च तूणैः शूलैः परश्वधैः ।
प्रासैश्च तोमरैश्चैव कुन्तैर्यष्टिभिरेव च । शतघ्नीभिर्भुशुण्डीभिः खड्गैः परशुभिस्तथा ।
मुषलैर्मुद्गरैश्चैव गदाभिः कुणपैस्तथा । सुवर्णविकृताभिश्च कशाभिर्भरतर्षभ ।
घण्टाभिश्च गजेन्द्राणां भाण्डैश्च विविधैरपि । स्रग्भिश्च नानाभरणैर्वस्त्रैश्चैव महाधनैः ।
अपविद्धैर्बभौ भूमिर्ग्रहैर्द्यौरिव शारदी । पृथिव्यां पृथिवीहेतोः पृथिवीपतयो हताः ।
पृथिवीमुपगुह्याङ्गैः सुप्ताः कान्तामिव प्रियां । इमांश्च गिरिकूटाभान्नागानैरावतोपमान् ।
क्षरन्तः शोणितं भूरि शस्त्रच्छेददरीमुखैः । दरीमुखैरिव गिरीन् गैरिकाम्बुपरिस्रवान् ।
तांश्च बाणाहतान् वीर पश्य निष्टनतः क्षितौ । हयांश्च पतितान् पश्य स्वर्णभाण्डविभूषितान् ।
गन्धर्व्वनगराकारान् रथांश्च निहतेश्वरान् । छिन्नध्वजपताकाक्षान् विचक्रान् हतसारथीन् ।
निकृत्तकूबरयुगान् भग्नेषाबन्धुरान् प्रभो । पश्य पार्थ हतान् भूमौ विमानोपमदर्शनान् ।
पत्तींश्च निहतान् वीर शतशोऽथ सहस्रशः । धनुर्भृतश्चर्मभृतः शयानान् रुधिरोक्षितान् ।
महीमालिङ्ग्य सर्व्वाङ्गैः पांशुध्वस्तशिरोरुहान् । पश्य योधान्महाबाहो त्वच्छरैर्भिन्नविग्रहान् ।
निपातितद्विपरथवाजिसङ्कुलमसृग्वसापिशितसमृद्धकर्द्दमं । निशाचरश्ववृककपिशाचमोदनं महीतलं नरवर पश्य दुर्द्दृशं ।
इदं महत्त्वय्युपपद्यते प्रभो रणाजिरे कर्म यशोऽभिवर्द्धनं । शतक्रतौ चापि च देवसत्तमे महाहवे जघ्नुषि दैत्यदानवान् ।
सन्दर्शयन्नेव किरीटिनेऽरिहा जनार्द्दनस्तामभिसृत्य भूमिं । अजातशत्रुं समुपेत्य पाण्डवं निवेदयामास हतं जयद्रथं ।
चामरव्यजनैश्छत्रैर्ध्वजैश्चाश्वरथद्विपैः । विविधैश्च परिस्तोमैरश्वानाञ्च प्रकीर्णकैः ।
कुथाभिश्च विचित्राभिर्वरूथैश्च महाधनैः । संस्तीर्णां वसुधां पश्य चित्रपट्टैरिवावृतां ।
नागेभ्यः पतितानन्यान् कल्पितेभ्यो द्विपैः सह । सिंहान् वज्रप्रणुन्नेभ्यो गिरिशृङ्गेभ्य इव च्युतान् ।
संस्यूतान् वाजिभिः सार्द्धं धनुर्भिश्च तथापरान् । पदातीन् सादिसङ्घांश्च क्षतजौघपरिप्लुतान् ।
॥ सञ्जय उवाच ॥ एवं सन्दर्शयन् कृष्णो रणभूमिं किरीटिने । स्वैः समेतः समुदितैः पाञ्चजन्यं व्यनादयत् ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युद्धभूमिदर्शनेऽष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥
॥ सञ्जय उवाच ॥ ततो राजानमभ्येत्य धर्मपुत्रं युधिष्ठिरं । ववन्दे सम्प्रहृष्टात्मा हते पार्थेन सैन्धवे ।
दिष्ट्या वर्द्धसि राजेन्द्र हतशत्रुर्नरोत्तम । दिष्ट्या निस्तीर्णवांश्चैव प्रतिज्ञामनुजस्तव ।
स त्वेवमुक्तः कृष्णेन हृष्टः परपुरञ्जयः । ततो युधिष्ठिरो राजा रथादाप्लुत्य भारत ।

